१ नागकेसरः २ दर्भाः ३० अगस्त्या ३ तिलः १ तगरः ६ पालाशं ६ कल्हारं ११ मल्लिका ४ चंपकः ९ करवीरं ८ कुंभी १ दमनं १ मरुबकः २ एतेषामेतद्दिनोत्तरं
पर्युषितत्वं तुलसीग्रहणकालः वैधृतौचव्यतीपातेभौमभार्गवभानुषु पर्वद्वयेचसंक्रांतौद्वादश्यांसूतकद्वये तुलसींयेविचिन्वंतितेछिंदंतिहरेःशिरः नैव
छिंद्याद्रवौदूर्वां तुलसींनिशिसंध्ययोः धात्रीपत्रंकार्तिकेच पुण्यार्थीमतिमान्नरः द्वादश्यांचदिवास्वापस्तुलस्यावचयस्तथा विष्णोश्चैवदिवास्नानंव
र्जनीयंसदाबुधैः अत्रदिवानिषेधाद्रात्रौस्नानादिषोडशोपचारैःपूजाकार्या दिवातुगंधपुष्पांजल्यंताएवोपचाराइतिकमलाकराह्निके विष्णोर्द्वाद
श्यांनिर्माल्यापनयनमर्पिनकार्यमितितंत्रांतरेस्मर्यते एतदपवादः पुरुषार्थचिंतामणौनारदीये पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनं द्वादश्यांपयसा
स्नाप्यहरिसायुज्यमश्नुते इति देवार्थेतुलसीच्छेदोहोमार्थेसमिधांतथा इंदुक्षयेनदुष्येतगवार्थेतुतृणस्यच तुलसीग्रहणमंत्रः तुलस्यमृतनामासिस
दात्वंकेशवप्रिये केशवार्थेविचिन्वामिवरदाभवशोभने जातिमल्लिकाकरवीराशोकोत्पलचंपकबकुलबिल्वशमीकुशाएतानिसर्वदेवानांविहितानि अ
थविहितप्रतिषिद्धत्वाद्वैकल्पिकानि पाटलाशमीपत्रंचदुर्गायाः कुंदपलाशबकुलदूर्वाःशिवस्य कुमुदतगरेसूर्यस्य तुलसीभृंगराजतमालपत्राणि
शिवदुर्गयोः अगस्तीमाधवीलतालोध्रपुष्पंविष्णुशिवयोः धत्तूरमंदारौविष्णुसूर्ययोः इतिविकल्पितानि अथविष्णोःप्रियाणि मालतीजातीके
तकीमल्लिकाशोकचंपकपुन्नागबकुलोत्पलकुंदकरवीरपाटलातगरपुष्पाणि अन्यानिचसुरभीणिविष्णोःप्रियाणि अपामार्गभृंगराजखदिरशमी-
दूर्वाकुशदमनकबिल्वतुलसीपत्राण्युत्तरोत्तराधिकप्रियाणि तुलसीसर्वाधिका जातिपुष्पसहस्रेणमालार्पणेकल्पकोटिसहस्रंविष्णुपुरेवासः
आम्रमंजर्यापूजनेगोकोटिदानफलं अथशिवस्य चतुर्णांपुष्पजातीनांगंधमाघ्रातिशंकरः अर्कस्यकरवीरस्यबिल्वस्यबकुलस्यच दशसुवर्ण

दानफलंश्वेतार्कपुष्पं ततःसहस्रगुणंबकुलंपुष्पं एवंधत्तूरशमीपुष्पद्रोणपुष्पनीलोत्पलानामुत्तरोत्तरशणांसहस्रगुणत्वं मणिमुक्ताप्रवालैरत्नैर
प्यर्चनंकृतं नगृण्हामिविनादेविबिल्वपत्रैर्वरानने सर्वकामप्रदंबिल्वंदारिद्र्यस्यविनाशनं नीलोत्पलसहस्रेणमालार्पणेकल्पकोटिसहस्रंशिवपुरे
वासः धत्तूरैर्बृहतीपुष्पैश्चपूजनेगोलक्षफलं पाटलामंदारापामार्गजातीचंपकोशीरतगरनागकेसरपुन्नागजपामल्लिसहकारकुसुंभपुष्पाणि-
शिवप्रियाणि धत्तूराणिकदंबानिरात्रौदेयानिशंकरे मदनरत्नेकेतकानिकदंबानीतिपाठः अभावेपुष्पपत्राणामन्नाद्येनाभिपूजयेत् शालितं-
डुलगोधूमयवैर्वापिसमाचरेत् अथनिषिद्धानि बंधूककुंदातिमुक्तकेतकीकपित्थबकुलशिरीषनिंबानि पुष्पपत्रादिकंस्वाभिमुखमुत्तानमर्पयेत्
पत्रंपुष्पंफलंनैवयथोत्पन्नंतथार्पयेदितिवचनात् बिल्वपत्रंतुस्वाभिमुखाग्रंन्युब्जमर्पयेत् पक्वाम्रफलस्यशिवार्पणेवर्षायुतंशिवपुरे वासः सव्यंव्रजे
ततोसव्यंप्रणालींनैवलंघयेत् इत्यादिस्थिरलिंगेप्रदक्षिणाप्रकारः चरेत्तुसव्यंनैवदेव्याअपिबकुलकुंदादिसहितान्येवप्रियाणि धान्यानांसर्वप
त्रैश्चपुष्पैर्देवींप्रपूजयेत् दूर्वाकुंदैःसिंधुवारैर्बंधूकागस्तिसंभवैः बिल्वपत्रैःपूजनेराजसूयफलं करवीरस्रजाग्निष्टोमस्य बकुलस्रजावाजपेय
स्य द्रोणस्रजाराजसूयस्येति एवंसूर्यविघ्नेशादेरपिप्रायोविष्णुवज्ज्ञेयानि अथशिवनिर्माल्यग्रहणविचारः अग्राह्यंशिवनैवेद्यंपत्रंपुष्पंफलं
जलं शालग्रामशिलासंगात्सर्वंयातिपवित्रतां शैवसौरनैवेद्यभक्षणेचांद्रायणं अभ्यासेद्विगुणं मत्याभ्यासेसांतपनं अन्यनिर्माल्येप्यनापद्येवं इ
दंचज्योतिर्लिंगस्वयंभूलिंगसिद्धप्रतिष्ठापितलिंगातिरिक्तस्थावरलिंगविषयं ज्योतिर्लिंगादौतुपूजकेनदत्तंफलतीर्थादिकंभक्त्याश्रद्धयाग्राह्यंनत्यक्तं
न पंचायतनस्थितलिंगेषुचरेषुप्रतिमासुचान्नादेरपिस्वयंग्रहणेपिनदोषः ज्योतिर्लिंगाद्यन्यस्थिरलिंगेषुतीर्थोदकचंदनमात्रंश्रद्धा[illegible]ः शिवोपास-

कैरवग्राह्यं ज्योतिर्लिंगादौ पूजकदत्तमन्नमपिभक्ष्यमितिकेचित् अथनक्षत्रसंज्ञाः ध्युत्तरारोहिणीध्रुवं मघाभरणीपूर्वात्रयंक्रूरं श्रवणत्रयपुन
र्वसुस्वात्यश्चरं अश्विनीहस्तपुष्यंक्षिप्रं अनुराधारेवतीमृगचित्रंमृदु कृत्तिकाविशाखेमिश्रं मूलाश्लेषाज्येष्ठार्द्रास्तीक्ष्णं इतिनक्षत्रसंज्ञाः प
त्रनोक्तातिथिस्तत्रग्राह्यारिक्ताममांविना वारोपियत्रनप्रोक्तस्तत्रार्कार्किकुजान्विना चरमृदुक्षिप्रध्रुवमूलविशाखामघास्वसकुजेष्ठशुभवारे भूक
र्षणंहितं सूर्यत्यक्तनक्षत्राभ्यष्टनवाष्टस्वशुभंशुभमशुभंफलमितिहलचक्रं अत्रैवनक्षत्रेशनिभौमभिन्नवारेबीजवापः सस्यारोपणंचधान्यच्छेदश्चक्षी
रवृक्षजन्यःखलमध्यस्तंभः धान्यानांमर्दनंज्येष्ठामूलमघाश्रवणरेवतीरोहिण्यनुराधाफल्गुनीद्वयेशुभं धान्यसंग्रहः क्षिप्रध्रुवचरमृदुमूलेषुज्ञगु
रुशुक्रेषुचरभिन्नलग्नेशुभः ॐ धनदायसर्वलोकहितायदेहिमेधान्यंस्वाहेति मंत्रंलिखित्वाधान्यागारेक्षिपेत् तेनधान्यवृद्धिः बुधमंददिने
नैवधनधान्यव्ययःशुभः अथान्नवान्नंसद्वारेमृदुक्षिप्रचरेदिवा अथवस्त्रादि वस्त्रविभूषणविधिर्ध्रुवाश्विनीहस्तपंचकपुनर्वसुद्वये-
पौष्णावासवभयोश्चसत्तिथौ मंदभौमशशिवासरान्विना अनुक्तेपीष्टदंवस्त्रंविप्राज्ञोत्सवलब्धिषु ध्रुवपुष्यादितोयोषिद्धृतेयावस्त्रभूषणे
नप्राप्नोतिपतिप्रीतिंस्वातिवारुणभेचया पादुकासनशय्यादेर्भोगःसन्तिथिवासरे ध्रुवक्षिप्रमृदुश्रोत्रभरणीषुपुनर्वसौ चेन्नव्यवस्त्रं
मध्यांशेदग्धस्फुटितपंकिलं तत्त्यजेच्छांतिकंकुर्यात्त्यजेद्वांत्यभागयोः विज्ञेयमेतच्छय्यायामास्तृतौपादुकास्वपि सूचीकर्मानुराधाश्विचित्रामृग
पुनर्वसौ वस्त्रक्षाल्यंधारणोक्तेकालेबुधदिनंविना भोजनंभाजनेरोप्यस्वर्णकांस्यादिनिर्मिते कुर्यादमृतयोगेषुचरक्षिप्रमृदुध्रुवैः स्याद्भूष-
णानांघटनंचरक्षिप्रमृदुध्रुवैः शुभवारेरत्नवतांमिश्रभेपिरवौकुजे इतिवस्त्रादिविचारः शस्त्राणांघट्टनंक्रूरमिश्राश्विमृगतीक्ष्णभे शस्त्रंधा

येध्रुवक्षिप्रमृदुज्येष्ठाविशाखके सेवाकार्याक्षिप्रमैत्रध्रुवेज्ञेज्यार्कभार्गवे मंदेपिचैत्सेवकर्क्षंस्वामिभान्नद्वितीयकं हस्तषट्कध्रुवश्रोत्ररेवतीपु
ष्यभेशुभं पुनर्वसौचशिबिकागजाश्वादिषुरोहणं राज्ञांविलोकनंक्षिप्रध्रुवतिहृद्यमृदुध्रुवे नित्यारंभःपुष्यध्रुवेमृगज्येष्ठाधनिष्ठयोः अनुराधा
शतभिषग्घस्तस्याच्छुभवासरे विपणिःस्यान्मृदुक्षिप्रध्रुवैरिक्ताकुजान्विना क्रयःकार्योश्विनीस्वातीश्रवश्चित्राशतांत्यभे विक्रयोभरणीपूर्वा
त्रयाश्लेषाग्निमिश्रभे सेतुबंधोध्रुवेस्वात्यांजीवार्कशनिवासरे नानापशुक्रियाहस्तपुष्याद्रामृगमिश्रभे पुनर्वसौधनिष्ठाश्विपूर्वाज्येष्ठाशतांत्य
भे त्यक्त्वार्कभौमेंदुशनीन्श्रुतिचित्राध्रुवाणिच अमारिक्ताष्टमीश्चापि गतित्रैयसुखाःशुभाः * दीप पशुगमनंपशुक्रयादिकमित्यर्थः * द्र
व्यंलघुचरैर्योज्यंवृद्ध्यर्थंचरलग्नके ऋणंभौमेनगृण्हीयान्नद्वियोगेर्कसंक्रमे धनिष्ठापंचकेहस्तेत्रिपुष्करद्विपुष्करे भौमादिषुऋणच्छेदंकुर्याच्च
धनसंग्रहं बुधेधनंनप्रदेयंसंग्रहस्तुबुधेशुभः शन्यर्कारैस्त्रिपादर्क्षैभद्रातिथ्यात्रिपुष्करः मृगचित्राधनिष्ठासुतत्तिथ्यन्द्विद्विपुष्करः शुभासु
भेषुत्रिगुणंद्विगुणंचफलंक्रमात् मिश्रक्रूरेषुतीक्ष्णेषुस्वात्यांद्रव्यंनलभ्यते दत्तंप्रयुक्तंनिक्षिप्तंनष्टंचेत्याहनारदः अंधमंदंचचिबिटंसुलोचनमि
तिक्रमात् गणनीयंरोहिणीभादंधेनष्टंलभेद्रुतं मंदेयत्नाल्लभेतैवचिबिटेस्वक्षयोर्नहि अन्विष्यंपूर्वतोंधेषुमंदसंज्ञेषुदक्षिणे प्रतीच्यांचिबि
टाख्येषुसुलोचनउदग्दिशि राजाभिषेकःश्रवणेध्रुवर्क्षेज्येष्ठामृदुक्षिप्रउदग्ध्रुवोस्यात् त्यक्त्वारिरिक्ताधिकचैत्ररात्रौश्चंद्रेज्यशुक्राभ्युदयेशुभा
य जलशयानांरवननंमघापुष्यध्रुवेमृगे पूर्वाषाढानुराधांत्यधनिष्ठाशतहस्तभे जलराशिगतेचंद्रेलग्नस्थेचबुधेगुरौ क्षौरंचौलोक्तनक्षत्रवारा
दिषुशुभंजगुः पंचमेपंचमेराज्ञांदिनेन्येषांयदृच्छया श्मश्रुकर्मभवेन्नैवनवमेदिवसेक्कचित् क्षौरंसूतेरतंदर्शवर्जयेच्चद्विजोविभुः क्षौरंनकुर्युर

भ्युक्तभुक्तस्नातविभूषिताः प्रयाणसमरारंभेनरात्रौनचसंध्ययोः श्राद्धाहेप्रतिपद्रिक्ताव्रतान्हिषुनवैधृतौ प्रत्यक्तंजन्मनक्षत्रंसर्वकर्मसुकीर्ति-
तं क्षौरप्रयाणभैषज्यंविवादेषुनशोभनं षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमीतथा आसुसन्निहितंपापंतैलंपुंस्त्रीभगेक्षुरे राजकार्यनियुक्तानांन-
राणांभूपजीविनां श्मश्रुलोमनखच्छेदेनास्तिकालविशोधनं क्षौरं नैमित्तिकंकार्यंनिषेधेसत्यपिध्रुवं यज्ञेमृतौबंधमोक्षेनृपविप्राज्ञयापिच
प्राग्वयस्कैःसपितृकैर्नकार्यंमुंडनंसदा मुंडनस्यनिषेधोपिकर्तनंतुविधीयते उदङ्मुखःप्राङ्मुखोवावपनंकारयेत्सुधीः केशश्मश्रुलोमन-
खान्युदक्संस्थानिवापयेत् आनर्तोहिच्छत्रःपाटलिपुत्रोदितिर्दितिश्रीशाः क्षौरेस्मरणादेषांदोषान्नश्यंतिनिःशेषाः अथरोगोत्पत्तौनक्षत्रफ-
लं अश्विन्यांरोगोत्पत्तावेकाहंनववादिनानिवापंचविंशतिदिनानिवापीडा १ भरण्यामेकादशैकविंशतिर्वामासंवामृत्युर्वा २ कृत्तिकायांदशनवैक-
विंशतिर्वा ३ रोहिण्यांदशवानववासप्तवात्रीणिवाहानि ४ मृगेपंचनववात्रिंशद्वा ५ आर्द्रायांमृत्युर्वादशाहंवामासंवा ६ पुनर्वसौसप्तनववामृत्यु-
र्वा ७ पुष्येसप्तवामृत्युर्वा ८ आश्लेषायांमृत्युर्वाविंशतिस्त्रिंशद्वानववादिनानिपीडा ९ मघायांमृत्युर्वासार्धमासंवाविंशतिदिनानिवापीडा १० पूर्वा-
फाल्गुन्यांमृत्युर्वाब्दंमासंवापीडापंचदशवाषष्टिर्वादिनानि ११ उत्तरायांसप्तविंशतिःपंचदशसप्तवादिनानि १२ हस्तेमृत्युरष्टवानववासप्तवापंच-
दशवाहानि १३ चित्रायांपक्षमष्टवादशवैकादशवाहानि १४ स्वात्यांमृत्युर्वैकाहद्वित्रिचतुःपंचमासैर्वादशादिनैर्वारोगनाशः १५ विशाखायांमासंवा
पक्षंवाष्टदिनंविंशतिदिनानिवापीडा १६ अनुराधायांदशरात्रमष्टाविंशतिरात्रंवा १७ ज्येष्ठायांमृत्युर्वापक्षंवामासंवैकविंशतिरात्रंवापीडा १८ मू-
लेमृत्युःपक्षंनवरात्रंविंशतिरात्रंवापीडा १९ पूर्वाषाढायांमृत्युर्वाद्वित्रिषडादिमासैर्विंशतिदिनैःपक्षेणवारोगनाशः २० उत्तराषाढायांमा-

र्धमासं विंशतिरात्रं वा मासं वा २१ श्रवणे पंचविंशतिर्दश वैकादश वा षष्टिर्वाहानि २२ धनिष्ठायां दशरात्रं पक्षं मासं त्रयोदशरात्रं वा २३ शततारकायां द्वादशाष्टैकादश वा २४ पूर्वाभाद्रपदायां मृत्युर्वा द्वित्र्यादिमासं वा दशरात्रं वा २५ उत्तराभाद्रपदायां सार्धमासं पक्षं सप्ताहं दशाहं वा २६ रेवत्यां ज्वरा
द्युत्पत्तौ दशाहमष्टाविंशतिरात्रं वा पीडा २७ जन्मनक्षत्रे जन्मराशावष्टमचंद्रे च रोगोत्पत्तौ मृत्युः अर्कादिवारे क्रमेण मघा द्वादश्योर्विशाखैकादश्यो
पंचम्यार्द्रे तृतीयोत्तराषाढे शततारा षष्ठ्यो अष्टम्यश्विन्यो पूर्वाषाढानवम्यो चेति त्रयाणां योगे मृत्युः एवमर्कादावनुराधा भरण्यो आर्द्रोत्तराषाढे मघा
शततारे विशाखाश्विन्यौ ज्येष्ठा मृगौ श्रवणाश्लेषे पूर्वाभाद्रपदा हस्तौ चेन्मृत्युयोगः अत्रोक्तास्तिथिवारनक्षत्रशांतयो विस्तृताः कार्याः येषु नक्षत्रे
षु मरणमुक्तं तत्र शांतिरावश्यकी अन्यत्र कृताकृता अथ सर्वनक्षत्रसाधारणः शांतिप्रयोगः देशकालौ संकीर्त्य ममोत्पन्नव्याधेर्जीवच्छरीराविरो
रोधेन समूलनाशार्थममुकनक्षत्रशांतिं करिष्ये इति संकल्प्य गणेशपूजादि आचार्यवृत्वा कुंभोपरि पूर्णपात्रे द्वादशदले नक्षत्रदेवताप्रतिमां सौवर्णीं
संपूज्य द्वादशदलेषु संकर्षणादिद्वादशमूर्तीर्द्वादशादित्यान्वा संपूज्य दूर्वासमित्तिलक्षीराज्यैर्गायत्र्या तत्तद्देवताया अष्टोत्तरशतं हुत्वा भरणादिपी
डाधिक्ये त्वोक्तौ सहस्रं हुत्वा दध्योदनं बलिं दत्वाचार्याय गां प्रतिमां च दद्यादिति संक्षेपः शांतिमयूखादौ नक्षत्रभेदेन हविर्मंत्रबलिधूपादिभेदस्तिथिवार
देवतामंत्रादिभेदइत्यादि विस्तारो द्रष्टव्यः कर्मविपाके जातवेदस इत्यृचोयुतलक्षं वा जपो रुद्रनमकानुवाकैः सहस्रकलशस्नानं वा विष्णोः सहस्रा
ष्टत्पुरुषसूक्तेन सहस्रघटस्नानं वा ज्वरनाशकं यद्वा श्रीभागवतस्थज्वरस्तोत्रजपः अथ सर्वरोगनाशकानि रोगानुसारेण लघुरुद्रमहारुद्रातिरुद्राणां
जपो भिषेको वा विष्णुसहस्रनामस्तोत्रस्य शतं सहस्रमयुतं वा जपः सौरजपः सूर्यनमस्कारार्घ्यदानानि मुंचामीति सूक्तजपोऽच्युतानंतगोविंदेति नामत्र-

यजपोमृत्युंजयजपश्चरोगानुसारेणेतिसर्वरोगहराणि ज्येष्ठामूलश्रुतिस्वातीमृदुक्षिप्रपुनर्वसौ गुरुशुक्रेंदुवारेषुशस्तंभेषजभक्षणं रिक्तार्यांचरलग्ने
मिश्रक्षिप्रैंद्रमूलपूर्वासु चित्राभरणीश्रवणात्रयभैरविकुजबुधार्कजेस्नायात् वैधृतौचव्यतीपातेभद्रायांसंक्रमेतथा रोगमुक्तःस्नानमत्रचंद्रतारावलं
नवा अथाभ्यंगः भद्रासंक्रमपातवैधृतिसितेज्यार्कारषष्ठ्यादिषुश्राद्धाहेप्रतिपद्द्वयेपरिहरेद्धेतुंविनाभ्यंजनं मांगल्येविजयोत्सवोद्भवदनंदी
पावलीहेतवोभ्यंगस्याथबुधानुपर्क्षपित्भाभ्यंगात्पतिम्र्यंगना अथापवादः सार्षपंगंधतैलंचयत्तैलंपुष्पवासितं द्रव्यांतरयुतंतैलंपक्वतैलंनदु
ष्यति किंचिद्गोघृतयुक्तंवाविप्रपादरजोन्वितं नित्याभ्यंगेचनोदुष्टंतैलंनित्यंन्हिसर्वदा रवौपुष्पंगुरौदूर्वांभौमवारेचमृत्तिकां भार्गवेगोमयंक्षिप्त्वा
तैलस्नानंसुखावहं अथवास्तुप्रकरणं वैशाखेफाल्गुनेपौषेश्रावणेमार्गशीर्षके गृहारंभप्रवेशौस्तःस्तंभोच्छ्रायश्चशस्यते ज्येष्ठकार्त्तिक
माघांश्चशुभदान्प्राहनारदः तृणगेहंसर्वमासेपौषेसुखव्ययगृहंनहि हस्तत्रयध्रुवमृदुधनिष्ठाद्वयपुष्यभे रिक्ताअर्ककुजौत्यक्त्वागृहंकुर्याद्विशेद
पि शिलान्यासंत्वरवातंचश्रुत्यश्विक्रूरमित्रभैः आश्लेषामूलपुष्यार्कमृगांत्यध्रुवभैरपि केंद्राष्टमेपापहीनेवेश्मकृत्यंस्थिरोदये धनिष्ठापंचकेव
र्ज्यःस्तंभोच्छ्रायःसदाबुधैः नेष्टानिसप्तसूर्यर्क्षादिष्टान्येकादशाष्टमात् दशाशिष्टानिनेष्टानिचक्रेस्युर्वृषवास्तुनि यद्धातुर्यात्यंचदशात्त्रयो
विंशतिसंख्यकात् वेदाब्धिपंचमेष्टानिगृहारंभप्रवेशयोः स्नानंपाकस्वापवस्त्रभुंजीनांपशुकोशयोः देवानांचगृहान्कुर्यात्पूर्वादौसुखव्यवेश्मनः
उदग्दिशंध्रुवसुखाद्दक्षाखामाचींप्रसाधयेत् कोणाध्वक्रमकूपद्वाःपंकस्तंभद्रुमामरैः विद्धादुष्टाद्द्वारंदोषोगृहोच्चाद्द्विगुणांतरे सूत्रंभित्तिशि
लान्यासंस्तंभस्यारोपणंतथा आग्नेयींदिशमारभ्यकुर्यादित्याहकश्यपः अन्यवेश्मस्थितंदारुनान्यवेश्मनियोजयेत् नूतनेनूतनंकाष्ठंजी

र्णेजीर्णेप्रशस्यते द्वात्रिंशाधिकहस्तेचतृणागारेचतुर्मुखे नतत्रचिंतयेद्धीमान्गुणानायव्ययादिकान् अथगृहप्रवेशः वास्तुपूजाविधिःकार्यःपू
र्वमेवप्रवेशतः मैत्रध्रुवक्षिप्रचरमूलभैर्धनपुत्रकृत् वास्तुशांतिर्दिवेचोक्ताप्रवेशस्तुनिशिक्वचित् गृहप्रवेशःप्रारंभोदितमासादिकैःशुभः कुंभि
न्मार्गोर्जशुक्रेषुकेश्विदुक्तोमृदुध्रुवे श्रेष्ठःक्षिप्रेश्चरैर्मध्योनिंद्यस्तीक्ष्णोग्रमिश्रभैः त्रिषडायेखलैःषड्भिःषडष्टव्ययवर्जितैः शुद्धेंबुरंध्रेचतनौ
विजन्तुर्लग्नभाष्टमे ऋक्षाणिपंचसूर्यर्क्षान्नेष्टान्यष्टचतुर्दशात् शेषभानिशुभान्येवंप्रवेशोघटचक्रकं इतिवास्तुप्रकरणं अथधनाद्यर्थंग
मनं श्रुतिद्वयाश्विपुष्यांत्यानुराधामृगहस्तभे पुनर्वसौगोचरेष्टप्रदवारेव्रजेन्नरः अभिजिद्गमेश्रेष्ठंदक्षिणाशांविनाक्षणः मघाचित्रात्र-
याश्लेषाभरण्यार्द्राःसकृत्तिकाः पूर्वाभाद्राचनेष्टाःस्युःप्रयाणेजन्मभंतथा त्यजेद्रिक्तापर्वषष्ठ्यष्टमीद्वादशिकास्तिथीः कृत्तिकाभरणीपूर्वामघा
नांघटिकाःक्रमात् एकविंशतिसप्ताथषोडशैकादशत्यजेत् ज्येष्ठाश्लेषाविशाखास्वात्यांचापिचतुर्दश मृगोर्मतेसंकटेपिसर्वास्तासांमघांत्य
जेत् भरण्याःपूर्वमर्धंचचित्राश्लेषांतकोत्तरं वारशूलःसोमशनीप्राच्यामीज्यस्तुदक्षिणे रविशुक्रौप्रतीच्यांस्यादुदीच्यांबुधमंगलौ पूर्वादिदि
क्षुमेषाद्याःक्रमात्त्रिश्चंद्रराशयः संमुखोदक्षिणेज्ञःसन्पृष्ठेवामेनिनिंदितः दिशियत्रोदेतिशुक्रस्तांदिशंनव्रजेन्नरः नव्रजेत्संमुखेज्ञेपिशुभं
पृष्ठोपिवामतः रेवतीमेषभेचंद्रेशुक्रांध्यात्संमुखंव्रजेत् प्रयाणेशुभाःकेंद्र १।४।७।१० कोणेषु ५।९ शस्ताःखलास्त्र्यायषट्केष्वनिष्टः ३।११।६ श-
निःखे १० कविःसप्तमे ७ग्लौःषडष्टांत्यलग्ने ६।८।१२।१ विलग्नेश्वरोप्यस्तषष्ठाष्टमांत्ये ७।६।८।१२ केंद्रेवक्रीवक्रिवर्गोलग्नेवारश्चवक्रिणः कुं-
भः कुंभनवांशश्चलग्नेत्याज्यःप्रयत्नतः मीनलग्नेतदंशेवायातुर्मार्गोऽतिदुःखदः शत्रुलग्नभतःषष्ठंतत्पतिर्वामृतिप्रदः शत्रुक्षेत्रेतदंशेवान

दृष्टेगमनंनसत् लग्नेस्वंगतराशिश्चजन्मराशिश्चनोशुभः शशीवर्गोत्तमेलग्नेवर्गोत्तमयुतेजयः शुक्लादितिथिवारर्क्षयोगोश्वैरष्टभिस्त्रिभिः
त्रिस्थश्चाष्टौवशिष्टश्चेत्सर्वांकःसार्वकामिकः भिन्नुक्रमान्नुवेच्छून्यंतुःखवाग्निर्मृत्युदं यद्येकस्मिन्नेवदिनेपुराद्गच्छेत्पुरांतरं प्रावेशिकीका
लशुद्धिस्तदाह्नेयानयात्रिकी प्रवेशान्निर्गमोनेष्टः प्रवेशोनिर्गमादपि जिष्णोःकदापिनवमेधिष्ण्येवारेतिथौतथा याम्यदिग्गमनंशय्यावितानंछाद
नंगृहे नकुंभमीनगेचंद्रेतृणकाष्ठस्यसंग्रहः सर्पिताग्निस्तृहद्दिग्भार्यादिस्त्रीभिर्मान्व्रजेत् स्वकीयांपरकीयांवास्त्रियंपुरुषमेववा ताडयित्वातुयोग
च्छेद्ब्राह्मणानवमान्यच व्याधितःक्षुधितश्चापितद्वत्तस्यजीवितं क्रोधंक्षौरंतथावांतिंतैलाभ्यंगाश्रुमोचनं मद्यंमांसंगुडंतैलंसितान्यतिलकंतथा
श्वेतभिन्नंचवसनंप्रयाणेपरिवर्जयेत् क्षौरंपंचदिनंदुग्धंत्रिदिनंसप्तरात्रकं मैथुनंचापरंतैलंमध्वाज्यंतद्दिनेत्यजेत् स्त्र्यार्तवंबीजदानांतंतथाकुशकुनं-
स्त्यजेत् सुमुहूर्तेस्वयंगमनासंभवेप्रस्थानंकार्यं प्रस्थानंनामाभीष्टवस्तुचालनं यज्ञोपवीतकंशस्त्रंमधुचस्थापयेत्फलं विप्रादिःक्रमतःसर्वेस्वर्णधा
न्यांबरादिकं राजादशाहंपंचाहमन्योनप्रस्थितोवसेत् स्वयंगमनाद्धस्तस्थापनाख्यप्रस्थानेऽर्धफलं प्रस्थानदेशावधिः गेहाद्गेहांतरंगर्गः सीम्नः
सीमांतरंभृगुः बाणक्षेपंभरद्वाजोवसिष्ठोनगराद्बहिः प्रस्थानेपिकृतेनेयान्महादोषान्वितेदिने प्रस्थानदिनेपिक्रोधादिकंवर्जयेत् शकुनापश-
कुनप्रपंचोन्यत्र इतियात्राप्रकरणं अथगोचरप्रकरणं जन्मराशौक्रूरचंद्रास्त्रिषट्दशमगाःशुभाः सप्ताद्यगश्चापिचंद्रःशुक्लेद्विनव
पंचस्थः बुधोव्ययसमे २।४।६।८।१० जीवोद्विपंचनवसप्तस्थः जन्मादिपंचस्थस्तथानवाष्टद्वादशोभृगुः एकादशेसर्वखेटाःशुभाःस्फुरिति
संग्रहः जन्मसंपद्विपत्क्षेमप्रत्यरिःसाधिकावधः मैत्रातिमैत्राःस्युस्तारास्त्रिराहृत्यास्वजन्मभात् क्रमतःसूर्यादिबलंनृपदर्शनसर्वकार्येषुदृष्टेषु

शास्त्रकरग्रहयात्रादीक्षासूक्ष्मंविशेषेण अनिष्टसूर्यादीनांदानानिद्वितीयपरिच्छेदांते दक्षांगोदरनाभिहृत्स्तनपतितापल्लीवरांगेहन्तुंमृत्युकान्तुःशु
भदाःस्त्रियाःफलमिदंवामेतरव्यत्ययात् इत्याहुःसरठप्ररोहणफलंपातेन्यथैकेद्वयापल्यारोहणेकपिवस्त्रसहितंस्नात्वाचरेच्छांतिकं अथ
पल्लीसरठशांतिः तयोःस्पर्शमात्रेस्नानंकृत्वापंचगव्यंप्राश्याज्यमवलोक्याशुभनाशार्थंशुभवृद्ध्यर्थंवाशांतिःकार्या पल्याःसरठस्यवाहेम्नाप्र
तिमांकृत्वा रक्तवस्त्रेणसंवेष्ट्यसंपूज्यकलशेरुद्रंसंपूज्यमृत्युंजयमंत्रेणखादिरसमिद्भिरष्टोत्तरशतंतिलैर्व्याहृतिभिरष्टोत्तरसहस्रंशतंवाहुत्वाऽस्वि
ष्टकृदाद्यभिषेकांतेस्वर्णवस्त्रतिलदानं अथकपोतप्रवेशमधुवल्मीकोत्पत्तिपिंगलास्वरकाकवैकृतग्राम्यारण्यादिमृगपक्षिविकारेशांतिः देवाःक
पोतइतिपंचर्चस्यसूक्तस्यसहस्रंशतंवा यतइंद्रभयामहेस्वस्तिदाविशस्त्र्यंबकमितिमंत्रैर्हुत्वाव्याहृतिभिरष्टोत्तरशतंतिलहोमंकुर्यात्. अथवापंच
विप्रैःक्रमेणदेवाःकपोतइतिसूक्तंसुदेवोअसीत्यृचंकनिक्रदादितिशाकुंतसूक्तंनमोब्रह्मणेनमोइतिमंत्रंचसहस्रादिसंख्ययाजप्त्वोपनिषदश्चपठि-
त्वाव्याहृतिभिस्तिलहोमंकुर्यात् अथकाकस्पर्शमैथुनादिदर्शनशांतिः संकल्पाद्यग्निप्रतिष्ठापनांतेकुंभेसौवर्णमिंद्रंलोकपालांश्चसंपूज्याग्नौ
चरुंश्रपयित्वापलाशसमिच्चर्वाज्यव्रीहिभिःप्रत्येकमष्टोत्तरंसहस्रंशतंवायतइंद्रेतिमंत्रेणहुत्वालोकपालेभ्यस्तैरेवदशकृत्वःसकृद्धाहुत्वा लोकपाल
बलिंकुंभाग्रेवायसेभ्योबलिमैंद्रवारुणेतिमंत्रेणदत्त्वायजमानोभिषेकांतेशतंदशवाविप्रान्भोजयेत् घरट्टोलूखलमुसलदृषदासनमंचकादेरक
स्मात्स्फुटनेघृताक्तमधुसुताश्वत्थसमिधःप्रजापतयेहुत्वागायत्र्याष्टोत्तरसहस्रेणाभिमंत्रयेत् नानाविधदिव्यभौमांतरिक्षोत्पातेषुशांतिः सं
कल्पादिकृत्वाकुंभेइंद्र रुद्रौसंपूज्य यतइंद्रस्वस्तिदाविशस्पतिःअघोरेभ्यइतिमंत्रैःसमिदाज्यचरुव्रीहितिलान्प्रतिद्रव्यमष्टोत्तरशतंहुत्वाव्या

ह्निभिः कोटिहोमंलक्षहोममयुतहोमंतत्पादहोमंवातिलैर्वित्तानुसारेणनिमित्तानुसारेणचसप्तरात्रंत्रिरात्रमेकरात्रंवाकृत्वा सूर्यगणेशक्षेत्रपाल
दुर्गामंत्राणांजपंकृत्वा पायसादिनाब्राह्मणभोजनंकार्यं यद्वाचंडीसप्तशतीजपः अथवारुद्रैर्जपोभिषेकोवा अश्वत्थप्रदक्षिणाशिवपूजा
गोविप्रपूजादिवेतिमानोत्पातसामान्यशांतयः अथगायत्रीपुरश्चरणप्रयोगः देशकालौसंकीर्त्य करिष्यमाणगायत्रीपुरश्चरणेधिकारसि-
द्ध्यर्थंकृच्छ्रत्रयममुकप्रत्याम्नायेनाहमाचरिष्ये इतिसंकल्प्यहोमादिप्रत्याम्नायविधिनाकृच्छ्राण्यनुष्ठायामुकशर्मणोममगायत्रीपुरश्चरणेनेनकृ
च्छ्रत्रयानुष्ठानेनाधिकारसिद्धिरस्त्वितिविप्रान्वदेत् विप्राअधिकारसिद्धिरस्त्वितिब्रूयुः ततःकरिष्यमाणपुरश्चरणांगत्वेनविहितंगायत्रीजपा
दिकरिष्यइतिसंकल्प्य स्वयंविप्रद्वारावाकुर्यात् तद्यथा सप्रणवव्याहृतिकगायत्र्याअयुतंजप्त्वा आपोहिष्ठेतिसूक्तं एतोन्विंद्रमितिचतस्रः
ऋतंचेतिसूक्तंस्वस्तिनइत्याद्याःस्वस्तिमतीःस्वादिष्ठयेत्याद्याःपावमानीश्चसर्वाःप्रत्येकंदशावारंस्वयमन्यद्वारावाजपंकृत्वा तत्सवितुरित्य-
स्याचार्यमृषिंविश्वामित्रंतर्पयामि गायत्रीच्छंदस्त॰ सवितारंदेवतांत॰ इतितर्पणंकृत्वा रुद्रंनमस्कृत्य कद्रुद्रायेत्यादीनिरुद्रसूक्तानि
जपेत् ततोदिनांतरेदेशकालौसंकीर्त्यममसकलपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंचतुर्विंशतिलक्षात्मकगायत्रीपुरश्चरणंस्वयंविप्रद्वारावाक
रिष्ये तदंगत्वेनस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंविप्रद्वाराजपंजपकर्तृवरणंचकरिष्ये इतिसंकल्पः संकल्पस्यापिऋत्विकृकर्तृकत्वेऽमुकश
र्मणोयजमानस्यसकलपापक्षयेत्यादियजमानानुज्ञयाकरिष्ये एवंपूर्वत्रापिसंकल्पऊह्यः नांदीश्राद्धांतेसविताप्रीयतामिति गायत्रीपुरश्चर
णेजपकर्तारंत्वांवृणेइतिविप्रंवृणुयात् वस्त्रादिभिःपूजयेत् अथनित्यकर्मण्येकोविप्रःस्वयंवाकुशाद्यासनोपविष्टः पवित्रपाणिराचम्यप्राणा

नामस्य देवताः प्रार्थयेत् सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा पवमानो दिक्पतिर्भूराकाशं खेचरामराः ब्रह्मशासनमास्थाय कल्पध्वमि
हसन्निधिमिति ततो देशकालौ संकीर्त्य प्रत्याह्निकजपं संकल्प्य गुरवे० गणपतये० दुर्गायै० मातृभ्यो० इति नत्वा त्रिः प्राणानायम्य तत्सवितुरि
ति गायत्र्या विश्वामित्रऋषिः सविता देवता गायत्री छंदः जपे वि० विश्वामित्रऋषये नमः शिरसि गायत्रीछंदसे नमो मुखे सवितृदेवतायै नमो हृ
दि इति न्यस्य तत्सवितुरंगुष्ठाभ्यां० वरेण्यं तर्जनीभ्यां० भर्गो देवस्य मध्यमा० धीमहि अनामिका० धियो यो नः कनिष्ठिकाभ्यां० प्रचोदयात् करत
लकरपृष्ठाभ्यां० इति करन्यासं कृत्वैवं हृदयादिषडंगन्यासं कुर्यात् पूर्वोक्तरीत्या संस्कृतां जपमालां पात्रे निधाय संप्रोक्ष्य ॐ महामाये महामा
ले सर्वशक्तिस्वरूपिणि चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मां सिद्धिदा भवेति प्रार्थ्य ॐ अविघ्नं कुरु माले त्वमिति तामादाय मंत्रदेवतां सवितारं ध्यायन् हृदये
मालां धारयन् मंत्रार्थं स्मरन् मध्यंदिनावधि जपेत् अतित्वरायां सार्धत्रयप्रहरावधि जपांते पुनः प्रणवमुक्त्वा त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव
शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदेति मालां शिरसि निधाय त्रिः प्राणानायम्य न्यासत्रयं कृत्वा जपमीश्वरार्पणं कुर्यात् प्रत्यहं समानसंख्य एव ज
पो न तु न्यूनाधिकः एवं पुरश्चरणजपसमाप्तौ होमः पुरश्चरणसांगतासिद्ध्यर्थं होमविधिं करिष्ये इति संकल्प्याग्निं प्रतिष्ठाप्य पीठे सूर्यादिनवग्रह
पूजनादि कलशस्थापनांतेन्वादध्यात् चक्षुषी आज्येनेत्यंते ग्रहपीठदेवतान्वाधानं अर्कादिसमिच्चर्वाज्याहुतिभिः कृत्वा प्रधानदेवतां सवितारं च
तुर्विंशतिसहस्रतिलाहुतिभिस्त्रिसहस्रसंख्याकाभिः पायसाहुतिभिर्घृतमिश्रतिलाहुतिभिर्दूर्वाहुतिभिः क्षीरद्रुमसमिधाहुतिभिश्च शेषेण स्विष्ट
कृतमित्यादि चरुपायसतिलैः सहाज्यस्य पर्यग्निकरणादि आज्यभागांते इदं हवनीयद्रव्यमन्वाधानोक्तदेवताभ्योस्तु न ममेति यजमानस्त्यागं कुर्यात्

होमेसप्रणवव्याहृतिरहितास्वाहांतागायत्री दूर्वात्रयस्यैकाहुतिः दूर्वासमिधांदधिमध्वाज्यांजनंस्विष्टकृदादिबलिदानांतेसमुद्रज्येष्ठाइत्यादिभि-
र्यजमानाभिषेकः प्रतिलक्षंतुसुवर्णनिष्कत्रयंतदर्धंवाशक्त्यावादक्षिणा होमांतेजलेदेवंसवितारंसंपूज्य होमसंख्यादशांशेन २४०० गायत्र्यंते-
सवितारंतर्पयामीत्युक्त्वातर्पणंकार्यं तर्पणदशांशेन २४० गायत्र्यंतेआत्मानमभिषिंचामिनमइतिस्वमूर्ध्न्यभिषेकः होमतर्पणाभिषेकाणांमध्ये
यदेकंनसंभवतितत्स्थानेतत्तद्द्विगुणोजपःकार्यः अभिषेकसंख्यादशांशंवाधिकंवाविप्रभोजनं पुरश्चरणंपूर्णमस्त्वितिविप्रान्वाचयित्वा ईश्वरार्पणं
कार्यं प्रत्यहंयज्जाग्रतइतिशिवसंकल्पमंत्रस्यत्रिःपाठः कर्ताब्राह्मणैःसहहविष्याशीसत्यवागधःशायीपरिगृहीतभूप्रदेशानतिचारीचभवेत्
इत्यनंतदेवीयानुसारेणचतुर्विंशतिलक्षपुरश्चरणप्रयोगः ऋग्विधानेतु मध्यान्हेमितभुङ्मौनीत्रिःस्नानार्चनतत्परः लक्षत्रयंजपेद्धीमानि-
तित्रिलक्षंपुरश्चरणमुक्तं जपशतांशास्त्रिसहस्रंहोमः कलौचतुर्गुणंप्रोक्तमितिपक्षेद्वादशलक्षजपोद्वादशसहस्रहोमइत्याद्यूह्यं विष्णुशयन-
मासेषुपुरश्चरणंनकार्यं तीर्थादौशीघ्रंसिद्धिः बिल्ववृक्षाश्रयेणजपेएकाहात्सिद्धिरितिसर्वमंत्रप्रक्रिया इतिगायत्रीपुरश्चरणंज्ञेयं अथपूर्त-
कमलाकरेऽश्वत्थोपनयनं तच्चवर्णैःक्रमेणवृक्षस्थापनादष्टमैकादशद्वादशवर्षेउपनयनोक्तमुहूर्तेपूर्वाण्हेकार्यं शूद्रस्यापिताद्ववस्थैपौराणिक-
मंत्रैरारामप्रतिष्ठामात्रंकार्यंनोपनयनं अथप्रयोगः कर्तादेशकालौसंकीर्त्य सर्वपापक्षयकुलकोटिसमुद्धरणपूर्वकविष्णुसायुज्यप्राप्तिका-
मोऽश्वत्थोपनयनंकरिष्येइतिसंकल्प्य नांदीश्राद्धांतेआचार्यंवृणुयात् आचार्यःपंचामृतैःशुद्धोदकैःसर्वौषधिजलैश्चाश्वत्थमभिषिंच्य पि-
ष्टातकेनालंकृत्य तत्पूर्वस्यांस्थंडिलेऽग्निंप्रतिष्ठाप्यान्वाधानेऽग्निंवायुंसूर्यंत्रिरग्निंपवमानंप्रजापतिंद्विरोषधीवनस्पतिंपिप्पलंप्रजापतिंचपलाशं

समिच्चर्वाज्यैः प्रत्येकमेकैकयाहुत्या शेषेणेत्यादि अष्टचत्वारिंशान्युष्टीनांतूष्णींनिर्वापप्रोक्षणेश्रपणाद्याज्यभागांते युवंवस्त्राणीत्यश्वत्थंवस्त्रयुग्मेनावे
ष्ट्य यज्ञोपवीतमितियज्ञोपवीतंदत्वा प्रावेपामेतिमेखलांत्रिरावेष्ट्याजिनंदंडंचतूष्णींदत्वा अश्वत्थेवइत्यृचागंधपुष्पैः संपूज्य देवस्यत्वेतिमंत्रांतेह
स्तेगृण्हाम्यश्वत्थेतिस्पृष्ट्वासप्रणवव्याहृतिकांगायत्रींत्रिर्जपित्वा अश्वत्थेवोनिषदनमितिसूक्तेनव्याहृतिभिश्चाश्वत्थंस्थापयामीतिस्वर्णशलाकया
स्पृष्ट्वाज्यपलाशसमिच्चरुभिः प्रत्येकंद्वादशमंत्रैर्द्वादशाहुतीर्जुहुयात् मंत्रास्तु भूःस्वाहा अग्नयइदं भुवः॰ वायवइ॰ स्वःस्वा॰ सूर्याय॰ भूर्भुवःस्वः
स्वा॰ प्रजापतयइ॰ अग्नआयूंषिपवसआसुवोर्जमिषंचनः आरे॰ अग्निर्ऋषिःप॰ अग्नेपवस्वेतित्रिभिरग्नयेपवमानायेदं॰ प्रजापतेनत्वदं॰ प्रजा
पतय॰ ओषधयःसंवदंते॰ अश्वत्थे॰ ओषधीभ्यइ॰ वनस्पतेशतव॰ वनस्पत॰ हृत्सुपर्णा॰ पिप्पलाय॰ समस्तव्याहृतिभिः प्रजापतय॰ स्विष्टकृदा
दिहोमशेषंसमाप्याश्वत्थेवइतिगंधपुष्पधूपदीपनैवेद्यफलतांबूलाद्यैः संपूज्याश्वत्थंस्पृष्ट्वाचार्यायगामन्येभ्योदक्षिणांदत्वाश्वत्थवस्त्रादिकमाचा
र्यायदत्वाष्टौविप्रान्भोजयेदिति अपुत्रेणपुंसास्त्रियावावटप्लक्षाम्रादेः पुत्रत्वेनप्रतिग्रहः कार्यः देशकालौसंकीर्त्य ममममहापापक्षयकुलत्रय
समुद्धरणप्रजापतिपुरगमननिरयस्थपितृद्धारणमधुधारातृप्तिसिद्ध्यर्थंसत्पुत्रत्वसिद्ध्यर्थममुकवृक्षंप्रतिगृहीष्ये इतिसंकल्प्योपवासंकृत्वारात्राव
ष्टविप्रानाहूयचंद्रंसंपूज्यजागरंभूशयनंवाकृत्वा प्रातर्वृक्षंसंपूज्य तच्छायायांविप्रान्संभोज्यपुण्याहंवाचयित्वाप्रार्थयेत् अपुत्रोभगवंतो
त्रपुत्रप्रतिकृतिंतरुं गृहीष्यामिममानुज्ञांकर्तुमर्हथसत्तमाः ताम्रपात्रेपंचसौवर्णफलानिर्बीजपंचरत्नयुतान्यधिवास्यलोकपालबलीन्दद्यात् प
रेद्युस्तिलाज्यचरुभिरष्टशतंवनस्पतिमंत्रेणहुत्वा जातकर्मादिविवाहांतसंस्कारान्कृत्वाभिषिक्तः कर्तापुष्पांजलिमादायप्रार्थयेत् येशाखिनः

शिखरिणांशिरसांविभूषायेनंदनादिषुवनेषुकृतप्रतिष्ठाः येकामदाःसुरनरोरगकिन्नराणांतेमेनतस्यदुरितार्तिहराभवंतु एतेद्विजाविधिवदत्र
हुतोहुताशःपश्यत्यसौचहिमदीधितिरंतरस्थः त्वंवृक्षपुत्रपरिकल्पनयाहृतोसिकार्यंसदैवभवतामममपुत्रकार्यं अंगारदंगादितिस्पृष्ट्वाविप्रेभ्योदक्षि
णांदत्वाविसृजेत् इतिवशादितरुपुत्रविधिः अथसकलकर्मसाधारणपरिभाषा सर्वेषुपाकयज्ञेषुभवेद्रक्षाकृताकृतः पात्रासादनमिच्छा
तआज्यादिश्रपणानिच स्रुवादिमार्जनंचेध्मरज्जुप्रहरणंतथा पूर्णपात्रंभवेन्नित्यमाज्यस्योत्पवनंतथा व्रीहीणामवघातश्चतंडुलेषुकृताकृ
तः द्रवीभूतघृतस्यापिविलापनविधिस्तथा प्रतिपदोक्ताज्यहोमेपरिस्तरणंविकल्पितं अनादिष्टाज्यहोमेतुनित्यं आज्यभागसहिततद्रहितक
र्मणोस्तंत्रप्रयोगेआज्यभागाननुष्ठानमेवयुक्तं सर्वत्राज्यभागयोर्विकल्पितत्वात् अनेकपाकयज्ञानामेककालानुष्ठानेसमानतंत्रता तेनस्विष्टकृ
ताद्येकमेव यत्रद्रव्यंनोक्तंतत्राज्यंग्राह्यं मंत्रांतेकर्मकर्तव्यंमंत्रस्यकरणत्वतः कर्मावृत्तौतुमंत्रस्याप्यावृत्तिर्गृह्यकर्मणि समंत्रकहोमेतूष्णींनि
र्वापः नाम्नाहोमेनाम्नैवनिर्वापादियत्रमंत्रेणनाम्नावाहोमोनोक्तस्तत्रनाम्नैवहोमः समंत्रकहोमेसहैवानेकदैवत्यचरुपाकेपिनविभागोनाभिमर्श-
श्च अनुक्तोदक्षिणःकरः दिशामनुक्तौप्राच्युदीचीशान्यः तिष्ठन्नासीनइत्याद्यनुक्तावासीनतैव अनादेशोस्वयंकर्ता अविज्ञातस्वरोमंत्रःसौत्र
एकश्रुतिर्भवेत् होमेषुमंत्रंस्वाहांतंप्रणवाद्यंचकारयेत् विप्रादीनांद्विदर्भस्यात्पवित्रंग्रंथितंनवा आहुतिप्रमाणं कर्षप्रमाणमाज्यादिलाजास्तु
ष्टिमितामताः अन्नंग्राससमंग्राह्यंकंदानामष्टमांशकः तिलसक्तुकणादीनांमृगीमुद्राप्रमाणतः ताम्रपात्रेणापिहितेताम्रपात्रादिकेशुभे अग्नि
प्रणयनंकार्यंमृन्मयेराजतादिकं उत्तमःश्रोत्रियागारान्मध्यमःस्वगृहादितः नाप्रोक्षितमिंधनमग्नावादध्यात् सदोपवीतिनाभाव्यंसदाबद्ध-

शिखेनच सदेतिकर्मांगतापुरुषार्थताच तेनकर्मकालेशिखाबंधनाद्यभावेप्रायश्चित्तद्वयमन्यदेकमेव दशाविधादर्भाउक्ताः वटप्लक्षबिल्ववै
कंकतचंदनदेवदारुसरलवृक्षजा अपिक्वचित्समिधः प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्तते समाप्नोतिफलंतस्यपरत्रेपिश्रुतिःस्मृतिः बह्व
ल्पंवास्वगृह्योक्तंयस्ययत्कर्मचोदितं तस्यतावतिशास्त्रार्थेकृतेसर्वःकृतोभवेत् अथकर्मविशेषेग्निनामानि अग्निस्तुमरुतोनामगर्भा
धानेविधीयते पवमानःपुंसवनेसीमंतेमंगलाभिधः प्रबलोजातसंस्कारेपार्थिवोनामकर्मणि अन्नाशनेशुचिःप्रोक्तःसभ्यःस्याच्चौलकर्मणि व्रता
देशेसमुद्भवः गोदानादौसूर्यः विवाहयोजकः आवसथ्येद्विजनामा प्रायश्चित्तेविटःपाकयज्ञेषुपावकः पित्र्येकव्यवाहनः दैवेहव्यवाहनः शां-
तिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः मृतदाहेक्रव्यादः ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत् पलाशेनजुहूःकार्याखदिरेणस्रुवःस्रुचः त
दभावेयथालाभयज्ञियवृक्षजाः तदभावेपलाशमध्यपर्णैर्वापिप्पलपर्णैर्वाहोमः एवंचप्रसाद्योपिखदिरादियज्ञियवृक्षजाः काम्येप्रतिनि
धिर्नास्तिनित्यनैमित्तिकेहिसः काम्येष्युपक्रमादूर्ध्वमन्येप्रतिनिधिंविदुः नस्यात्प्रतिनिधिर्मंत्रकर्मदेवाग्निकर्तृषु नदेशारणिकालेषुत्रिषुप्रति-
निधिर्मतः नातिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्रचित् स्वकालादुत्तरोगौणःकालःसर्वस्यकर्मणः तर्पणेप्यासनेश्राद्धेभुक्तौमूत्रपुरीषयोः ष
ट्सुनिर्माल्यकादर्भादर्व्याद्याअभिचारके मंत्रोपियश्चशूद्रार्थेब्राह्मणःप्रेतभोजने अथकर्मांगदेवताः विवाहस्याग्निर्देवता तेनविवा
हांगभूतस्वस्तिवाचनाद्यंतकर्मांगदेवताऽग्निःप्रीयतामितिवदेत् औपासनेग्निःसूर्यप्रजापतयः स्थालीपाकेऽग्निः गर्भाधानेब्रह्मा पुंस-
वनेप्रजापति सीमंतेधाता जातकर्मणिमृत्युः नामनिष्क्रमणान्नप्राशनेषुसविता चौलेकेशिनः उपनयनेइंद्रश्रद्धामेधाः अंतेसुश्रवाः पुन

रुपनयनेऽग्निः समावर्तनस्येंद्रः उपाकर्मणिव्रतेषुचसविता वास्तुहोमेवास्तोष्पतिरंतेप्रजापतिः आग्रयणेआग्रयणदेवताः सर्पबलैःसर्पाः
तडागादीनांवरुणः ग्रहयज्ञेआदित्यादिनवग्रहाः कूष्मांडहोमेचांद्रायणे अग्न्याधानेचाग्न्यादयः अग्निष्टोमसाग्निः अन्येष्विष्टकर्मसुप्र-
जापतिरिति कलियुगेकार्याकार्यविवेकः गीतागंगातथाविष्णुः कपिलाश्वत्थसेवनं एकादशीव्रतंचैवसप्तमंनकलौयुगे विष्णुंशिवंवाभ-
जतांगुरोःपित्रोःप्रसादिनां गोवैष्णवमहाशैवतुलसीसेविनामपि नस्यात्कलिकृतोदोषःकाश्यांनिवसतामपि कलौगुरूणांभजनमीशभक्त्य-
धिकंस्मृतं जपादीयप्रयासंख्याकलौसास्याच्चतुर्गुणा कलौदानंमहाश्रेष्ठंशिवविष्णोश्चकीर्तनं कृतेयद्दशभिर्वर्षैस्त्रेतायांहायनेनतु द्वा-
परेतन्तुमासेन अहोरात्रेणतत्कलौ प्रथमस्कंधे कुशलान्याशुसिद्ध्यंतिनेतराणिकृतानियदितिकलौपुण्यकर्मणांसंकल्पेपिसिद्धिः पापा-
नांत्वाचरणादेवेत्युक्तं स्मृत्यंतरविरोधेतुकलौपाराशरस्मृतिः ध्यायन्कृतेयजन्यज्ञैस्त्रेतायांद्वापरेऽर्चयन् यदाप्नोतितदाप्नोतिकलौसंकी-
र्त्यकेशवमितिहेमाद्रौव्यासवचनं अत्रकृतयुगाद्यधिकरणकध्यानादिफलार्थकल्याधिकरणककीर्तनंविधीयतइतिवाक्यार्थः कौस्तुभकर्तृ-
कपिलभट्टैर्भक्तिनिर्णयेविस्तरेणनिरूपितः हेमाद्रौ कलिंसभाजयंत्यार्यागुणज्ञाःसारभागिनः यत्रसंकीर्तनेनैवसर्वस्वार्थोऽभिलभ्यतइ-
तिश्रीभागवतवचनमुदाहृत्यासंकीर्तनेनहरिसंकीर्तनेनेत्यर्थइतिहेमाद्रावेवव्याख्यातं कृष्णवर्णंत्विषाकृष्णंसांगोपांगास्त्रपार्षदं यज्ञैः
संकीर्तनप्रायैर्यजंतीहसुमेधसः यज्ञादिस्वस्वाचारमाचरद्भिरपिकलिषुसंकीर्तननिष्ठैर्भाव्यमित्याशयइतिकौस्तुभे अनेनचतुर्वर्गफलंना-
रायणाश्रयणमात्रेणभवतीतिसिद्धं यावत्साधनसंपत्तिःपुरुषार्थचतुष्टये तयाविनातदाप्नोतिनरोनारायणाश्रयइतिभारतोक्तेः श्रीभागवतेपि

धर्मार्थकाममोक्षाख्यंयइच्छेच्छ्रेयआत्मनः एकंह्येवहरेस्तत्रकारणंपादसेवनमिति अत्रैकपदावधारणादिपदैरन्यसाधनानपेक्षत्वंभक्तियोगस्यो-
च्यते ज्ञानयोगादेश्चहरिपदसेवनसाक्षेपत्वंध्वन्यते तथाचस्कंधेएकादशादौ तस्मान्मद्भक्तियुक्तस्ययोगिनोवैमदात्मनः नज्ञानंनचवैराग्यंप्रायः
श्रेयोभवेदिह यत्कर्मभिर्यत्तपसाज्ञानवैराग्यतश्चयत् योगेनदानधर्मेणश्रेयोभिरितरैरपि सर्वंमद्भक्तियोगेनमद्भक्तोलभतेंजसा स्वर्गापवर्गम
द्धामकथंचिद्यदिवांछति इति श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंतियेकेवलबोधलब्धये तेषामसौक्लेशलवोविशिष्यतेनान्यद्यथास्थूलतुषाव
घातिनां इत्यादिपरसहस्रवचनानि ज्ञानयोगस्यभगवदाराधनंतत्प्रसादंचविनैवसिद्धिरितिक्वापिकेनाप्यनुक्तेश्च सर्वापेक्षाचयज्ञादिश्रुतेरश्ववव
दित्यधिकरणेज्ञानोत्पत्तौयज्ञादिसर्वसाधनापेक्षोक्तेश्च किंच भक्तियोगेदुराचारिणोपिदृढवैराग्यरहितस्याप्यधिकारोगम्यते अपिचेत्सुदुरा
चारोभजतेमामनन्यभाक् साधुरेवसमंतव्यःसम्यग्व्यवहितोहिसः क्षिप्रंभवतिधर्मात्माशश्वच्छांतिंनिगच्छति कौंतेयप्रतिजानीहिनमेभक्तः
प्रणश्यति ननिर्विण्णोनातिसक्तोभक्तियोगोस्यसिद्धिदइत्यादिवचनेभ्यः नैवंदुराचारिणोपिदृढवैराग्यादिसाधनचतुष्टयसंपत्यभावेपिवेदां
तश्रवणाद्यनुष्ठितेज्ञानोत्पत्तिर्भवतीतिक्वाप्युपलभ्यते नचयथोक्ताधिकारसंपन्नंविनानुष्ठितंसाधनंकिमपिफलायकल्पते तस्मात्सर्वथासर्वैः
कलौश्रीहरिपादसेवनादिभक्तियोगाश्रयणमेवकर्तव्यमितिसिद्धं अथकलौनिषिद्धानि समुद्रयात्रास्वीकारः कमंडलुविधारणं द्विजानामस
वर्णासुकन्यासूपयमस्तथा देवराच्चसुतोत्पत्तिमधुपर्केपशोर्वधः मांसदानंतथाश्राद्धेवानप्रस्थाश्रमस्तथा दत्ताक्षतायाःकन्यायाःपुनर्दानं-
परस्यच दीर्घकालंब्रह्मचर्यंनरमेधाश्वमेधकौ महाप्रस्थानगमनंगोमेधश्चतथामखः इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणः मद्यंवर्ज्यं

रुपनयनेऽग्निः समावर्तनेस्येंद्रः उपाकर्मणिव्रतेषुचसविता वास्तुहोमेवास्तोष्पतिरंतेप्रजापतिः आग्रयणेआग्रयणदेवताः सर्पबलेःसर्पाः
तडागादीनांवरुणः ग्रहयज्ञेआदित्यादिनवग्रहाः कूष्मांडहोमेचांद्रायणे अग्न्याधानेचाग्न्यादयः अग्निष्टोमसाग्निः अन्येष्विष्टकर्मसु प्र-
जापतिरिति कलियुगेकार्याकार्यविवेकः गीतागंगागौस्तथाविष्णुः कपिलाश्वत्थसेवनं एकादशीव्रतंचैवसप्तमंनकलौयुगे विष्णुंशिवंवाप्र
जतांगुरोःपित्रोःप्रसादिनां गोवैष्णवमहाशैवतुलसीसेविनामपि नस्यात्कलिकृतोदोषःकाश्यांनिवसतामपि कलौगुरूणांभजनमीशभक्त्य
धिकंस्मृतं जपादीयभ्यासंख्याकलौसास्याच्चतुर्गुणा कलौदानंमहाश्रेष्ठंशिवविष्णोश्चकीर्तनं कृतेयद्दशभिर्वर्षैस्त्रेतायांहायनेनतु द्वा
परेतत्तुमासेन अहोरात्रेणतत्कलौ प्रथमस्कंधे कुशलान्याशुसिद्ध्यंतिनेतराणिकृतानियत् इतिकलौपुण्यकर्मणांसंकल्पेपिसिद्धिः पापा
नांत्वाचरणादेवेत्युक्तं स्मृत्यंतरविरोधेतुकलौपाराशरस्मृतिः ध्यायन्कृतेयजन्यज्ञैस्त्रेतायांद्वापरेऽर्चयन् यदाप्नोतितदाप्नोतिकलौसंकी-
र्त्यकेशवमितिहेमाद्रौव्यासवचनं अत्रकृतयुगाद्यधिकरणकध्यानादिफलार्थकल्पाधिकरणककीर्तनंविधीयतइतिवाक्यार्थः कौस्तुभकर्तृ
कपिलाभट्टैर्भक्तिनिर्णयेविस्तरेणनिरूपितः हेमाद्रौ कलिंसभाजयंत्यार्यागुणज्ञाःसारभागिनः यत्रसंकीर्तनेनैवसर्वस्वार्थोभिलभ्यतइ
तिश्रीभागवतवचनमुदाहृत्यासंकीर्तनेनहरिसंकीर्तनेनेत्यर्थइतिहेमाद्रावेवव्याख्यातं कृष्णवर्णंत्विषाकृष्णंसांगोपांगास्त्रपार्षदं यज्ञैः
संकीर्तनप्रायैर्यजंतीहसुमेधसः यज्ञादिस्वस्वाचारमाचरद्भिरपिकलिषुसंकीर्तननिष्ठैर्भाव्यमित्याशयइतिकौस्तुभे अनेनचतुर्वर्गफलंना
रायणाश्रवणमात्रेणभवतीतिसिद्धं यावैसाधनसंपत्तिःपुरुषार्थचतुष्टये तयाविनातदाप्नोतिनरोनारायणाश्रयइतिभारतोक्तेः श्रीभागवतेपि

धर्मार्थकाममोक्षाख्यंयइच्छेच्छ्रेयआत्मनः एकंह्येवहरेस्तत्रकारणंपादसेवनमिति अत्रैकपदावधारणादिपदैरन्यसाधनानपेक्षत्वंभक्तियोगस्यो-
च्यते ज्ञानयोगादेश्चहरिपदसेवनसापेक्षत्वंध्वन्यते तथाचस्पष्टमेकादशादौ तस्मान्मद्भक्तियुक्तस्ययोगिनोवैमदात्मनः नज्ञानंनचवैराग्यंप्रायः
श्रेयोभवेदिह यत्कर्मभिर्यत्तपसाज्ञानवैराग्यतश्चयत् योगेनदानधर्मेणश्रेयोभिरितरैरपि सर्वंमद्भक्तियोगेनमद्भक्तोलभतेंजसा स्वर्गापवर्गंम
द्धामकथंचिद्यदिवांछति इति श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंतियेकेवलबोधलब्धये तेषामसौक्लेशलएवशिष्यतेनान्यद्यथास्थूलतुषाव
घातिनां इत्यादिपरसहस्रवचनानि ज्ञानयोगस्यभगवदाराधनंतत्प्रसादंचविनैवसिद्धिरितिक्वापिकेनाप्यनुक्तेश्च सर्वापेक्षाचयज्ञादिश्रुतेरश्वव
दित्यधिकरणेज्ञानोत्पत्तौयज्ञादिसर्वसाधनापेक्षोक्तेश्च किंच भक्तियोगेदुराचारिणोपिदृढवैराग्यरहितस्याप्यधिकारोगम्यते अपिचेत्सुदुरा
चारोभजतेमामनन्यभाक् साधुरेवसमंतव्यःसम्यग्व्यवहितोहिसः क्षिप्रंभवतिधर्मात्माशश्वच्छांतिंनिगच्छति कौंतेयप्रतिजानीहिनमेभक्तः
प्रणश्यति ननिर्विण्णोनातिसक्तोभक्तियोगोस्यसिद्धिदइत्यादिवचनेभ्यः नैवंदुराचारिणोपिदृढवैराग्यादिसाधनचतुष्टयसंपत्त्यभावेपिवेदां
तश्रवणाद्यनुष्ठितैर्ज्ञानोत्पत्तिर्भवतीतिक्वाप्युपलभ्यते नचयथोक्ताधिकारसंपत्तिंविनानुष्ठितंसाधनंकिमपिफलायकल्पते तस्मात्सर्वथासर्वैः
कलौश्रीहरिपादसेवनादिभक्तियोगाश्रयणमेवकर्तव्यमितिसिद्धं अथकलौनिषिद्धानि समुद्रयात्रास्वीकारः कमंडलुविधारणं द्विजानामस
वर्णासुकन्यासूपयमस्तथा देवराद्यैःसुतोत्पत्तिर्मधुपर्केपशोर्वधः मांसदानंतथाश्राद्धेवानप्रस्थाश्रमस्तथा दत्ताक्षतायाःकन्यायाःपुनर्दानं-
वरस्यच दीर्घकालंब्रह्मचर्यंनरमेधाश्वमेधकौ महाप्रस्थानगमनंगोमेधश्चतथामखः इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणः मद्यंवर्ज्यं

महापापेमरणांतविशोधनं सौत्रामण्यादियज्ञेपिसुरापात्रगृहस्तथा मद्यभक्षाद्यवामाद्यागमस्यतुनमानता मीमांसाहितयेसर्वेशिष्टैश्चनंदनादरात्
औरसोदत्तकश्चैतौपुत्रौकलियुगेस्मृतौ अन्यान्दशविधान्पुत्रान्क्रीतादीन्वर्जयेत्कलौ कौस्तुभेतुस्वयंदत्तस्तृतीयोपिकलौविहितइति नवैव
कलौनिषिद्धाइत्युक्तं कलियुगेब्रह्महंत्रादेरेवव्यवहार्यत्वादिरूपंपातित्यं तत्संसर्गिणस्तुनरकहेतुदोषसत्वेपिपातित्यंनास्ति संसर्गदोषः
पापेष्विति कलिवर्ज्येषुवचनात् कृतेसंभाष्यपतनित्रेतायांस्पर्शनेनतु द्वापरेत्वन्नमादायकलौपतनिकर्मणेतिवचनाच्च ब्रह्महननादिकर्म
णैवपातित्यंनसंसर्गमात्रेणेतितदर्थात् इदंचलोकेष्वबहिष्कृतपातकिषुलोकविद्विष्टत्वेनापरिहार्यसंसर्गेपातित्याभावपरं नहिलोकेष्वब
हिष्कृतानांप्रच्छन्नाभक्ष्यभक्षणापेयपानागम्यागमनादिपातकवतांतज्ज्ञानवतातिशिष्टेनापिसंभाषणादिसंसर्गोनरकहेतुरपिपरिहर्तुंशक्य
ते लोकविद्विष्टपापातात् लोकबहिष्कृतपापिनांसंसर्गस्तुपातित्यहेतुरेव तयैवशिष्टाचारादिनिमित्तानि अतएवत्यजेद्देशंकृतयुगेत्रेतायांग्रा
ममुत्सृजेत् द्वापरेकुलमेकंतुकर्तारंतुकलौयुगइतिवाक्येकर्तृत्यागोविधीयते त्यागोहिसंसर्गपरिहारएव किंचानेनवाक्येनयत्रकुलादेर्ब्र
ह्महत्यादिपातकीनिष्पद्यते तत्कुलादिकंद्वापरादावेवबहिष्कार्यं नतुकलौकुलादेर्बहिष्कारः किंतु कर्तुरेवकलौबहिष्कारइतिप्रतिपाद्यते न
वैतद्वाक्यविरोधिवाक्यांतरंपतितसगोत्रसपिंडादीनांकर्मानर्हत्वासंव्यवहार्यत्वप्रतिपादकंक्वापिग्रंथेउपलभ्यते यत्तुनिर्णयसिंधौघटस्फोट
प्रकरणेगृहेपुत्रेरमापद्येरन्निनिवसिष्ठवचनसामर्थ्यात्त्यात्रनिनयनात्प्राक्पतितज्ञातीनांधर्मकार्येष्वधिकारोनास्तीत्यपरार्कव्याख्यानमुपन्यस्तं त
त्सर्वपतितविषयम् किंतु घटस्फोटार्हप्रायश्चित्तानीच्छुपतितविषयं अन्यथापात्रनिनयनात्प्रागितिनवदेत् प्रायश्चित्तात्प्रागित्येवव

देत् कर्तारं तु कलौ युगे इत्यादि प्रत्यक्ष वचनेन विरोधे र्थापत्तिमूलकस्य सर्वपतितविषयक कुलबहिष्कारवर्णनस्य पुरुषव्याख्यानरूपस्याप्रा
माण्यापातान्नेति भाति नचैवं घटस्फोटविधिर्व्यर्थ इति वाच्यं तस्य पारलौकिकदोषपरिहारार्थत्वात् लोकबहिष्कृतपातकिविषये संभाष-
णादिसंसर्गस्य पातित्यहेतुत्वाभावेपि परत्र नरकजनकदोषहेतुत्ववत्पातिनेन सहैककुलत्वसंसर्गस्यापीह पातित्यादिदोषहेतुत्वाभावेपि पारत्रिक
दोषहेतुत्वात् अत्र च घटस्फोटविधेरर्थापत्तिविधेयामानत्वात्तयाच पारत्रिकदोषपरिहारार्थं घटस्फोटविधिरिति न तद्विधिबलेन पतितमात्रस्य
कुले बहिष्कार इति भातीति संक्षेपः सत्राख्ययज्ञः कलौ वर्ज्यः ब्रह्महत्यादिमहापातकेषु प्रायश्चित्तेन नरकनिवृत्तिर्न भवति किंतु इहलोके व्यवहा
र्यतामात्रं कलौ भवति स्वर्णस्तेयादिषु तु प्रायश्चित्तेन नरकनिवृत्तिर्व्यवहार्यता च केचित्तु रहस्यकृतेषु महापापेषु रहस्यप्रायश्चित्तं कलौ नोपदेष्टव्यमि
त्याहुः विप्रादिस्त्रीसंभोगेन भ्रष्टानां शूद्रादीनां प्रायश्चित्तेपि संसर्गो निषिद्धः यज्ञे पशुमारणं शूद्रहस्तेन कार्यं न तु विप्रेण स्वयं कार्यमित्यर्थः सोमविक्र
यश्च विप्राणां कलौ वर्ज्यः ज्येष्ठादि सर्व भ्रातॄणां समभागः कलौ स्मृतः आततायि द्विजानां नो धर्मयुद्धेपि हिंसनं अब्धौ नौयातुर्द्विजस्य प्रायश्चित्ते
पि संसर्गो न गवार्थं ब्राह्मणार्थं च प्राणत्यागः कलौ न हि द्विजानां गोपशूद्रादौ भोज्यान्नत्वं कलौ न हि शिष्यस्य गुरुपत्नीषु नचिरं वासशीलता
आपदि क्षत्रवैश्यादिवृत्तिर्विप्रः कलौ त्यजेत् कलौ द्विजो न हि भवेद्दश्ववस्त्रनिर्विकजीविकः द्वादशाब्दगुरोर्वासं मुखाग्निधमनक्रियां यतेर्भिक्षां स
र्ववर्णे कलौ त्रीणि विवर्जयेत् नवोदकनिषेधं च दक्षिणां गुरुवांछितां वृद्धरुग्णादि मरणं जलाग्निपतनादिभिः गोतृप्तिमात्रे भूमिष्ठे पयस्याचम
नक्रियां पितृवादे साक्षिदंडं कलौ पंच विवर्जयेत् घृतदुग्धादिभिः पक्कमन्नं शूद्रात्कलौ त्यजेत् भिक्षामटन्यतीरात्रौ न वसेद्गृहिणां गृहे विधूमसन्नमु

सलेकालेभिक्षांकलौत्यजेत् चत्वार्यब्दसहस्राणिचत्वार्यब्दशतानिच कलेर्यदागमिष्यंतितदात्रेतापरिग्रहः सन्यासश्चनकर्तव्योब्राह्मणेनविजानता
त्रेतापरिग्रहःसर्वाधानं अर्धाधानंस्मृतंश्रौतस्मार्ताग्न्योस्तुपृथक्कृतिः सर्वाधानंतयोरैक्यकृतिःपूर्वयुगाश्रया अस्यापवादः यावद्वर्णविभागोस्ति
यावद्वेदःप्रवर्तते संन्यासंचाग्निहोत्रंचतावत्कुर्यात्कलौयुगेइति शपथाःशकुनाःस्वप्नाःसामुद्रिकमुपश्रुतिः देवपूजोपहारादेःसंकल्पःकार्यसि
द्धये प्रश्नोत्तरंकालविदासंभवंतिकलौक्वचित् इतिकलौकार्याकार्यनिर्णयः अथस्वप्नविचारः स्वप्नोद्विविधः इष्टफलोनिष्टफलश्चेति त
त्रसामान्यतइष्टफलोयथा नदीसमुद्रतरणमाकाशगमनंतथा गृहनक्षत्रमार्तंडचंद्रमंडलदर्शनं हर्म्यस्यारोहणंचैवप्रासादशिरसोपिवा स्व-
प्नेचमदिरापानंवसामांसस्यभक्षणं कृमिविष्ठानुलेपश्चरुधिरेणाभिषेचनं भोजनंदधिभक्तस्यश्वेतवस्त्रानुलेपनं रत्नान्याभरणादीनिस्वप्नेदृ-
ष्ट्वाप्रसिद्ध्यति देवताविप्रपृथ्वीशान्प्रशस्ताभरणांगनाः वृषभेपर्वतक्षीरिफलिवृक्षाधिरोहणं दर्पणामिषमाल्याग्निःशुक्लपुष्पांबराश्रितान् द्र
ष्टुःस्वप्नेर्थलाभःस्याद्व्याधिमोक्षश्चजायते अथानिष्टफलः दुष्टंकिंशुकवल्मीकपारिभद्रादिरोहणं तैलकार्पासपिण्याकलोहप्राप्तिर्विपन्न
ये विवाहकरणंस्वप्नेरक्तस्रग्वस्त्रधारणं स्रोतसोहरणंनेष्टंपक्वमांसस्यभोजनं आदित्यस्याथचंद्रस्यनिष्प्रभस्यावलोकनं नक्षत्रादेश्च
पातश्चस्वप्नेमरणशोककृत् अशोककरवीरपलाशानांपुष्पितांस्वप्नेदर्शनेशोकः नौकारोहणेप्रवासः रक्तवस्त्रगंधधारिण्यास्त्रियालिंगनेमृत्युः
घृततैलादिनाभ्यंगेव्याधिः केशदंतपातेधननाशः पुत्रशोकोवा खरोष्ट्रमहिषैर्यानेतद्युक्तरथारोहणेवामृत्युः कर्णनासाकरादिच्छेदेपंकमज्जने
तैलाभ्यंगेविषभक्षणेप्रेतालिंगनेनलदमालिनोदिगंबरस्ययानेकृष्णपुरुषदर्शनेमृत्युः अथजागृतावनिष्टानि अरुंधतींध्रुवंचैवनभोमंदाकि

नींतथा स्वनासाग्रंचचंद्राकमायुर्हीनोनपश्यति पांसुपंकादिषुन्यस्तंचरणंखंडितंयदि स्नानांबुलिप्तगात्रस्ययस्यास्यंप्राक्प्रशुष्यति गात्रेष्वार्द्रे
षुसर्वेषुस्सूर्यादिद्वयदर्शनं स्वर्णप्रतीतिर्दृष्टेषुस्वपदानामदर्शनं पिहितेकर्णयुगुलेयस्यघोषानुपश्रुतिः अदर्शनंस्वशिरसः प्रतिबिंबेजलादि
षु छिद्रप्रतीतिश्छायायांसचिरंनैवजीवति अथविशेषइष्टफलाःस्वप्नाः यस्तुपश्यतिवेस्वप्नेराजानंकुंजरंहयं स्वर्णंवृषभंगांवाकु
टुंबंतस्यवर्धते वृषंवृक्षंवारुह्यतत्रस्थस्यजागरेधनाप्तिः श्वेतसर्पेणदक्षिणभुजदंशेदशदिनेसहस्रधनलाभः जलस्थस्यवृश्चिकोरगंग्रासेज
यपुत्रधनानि प्रासादशैलारोहणेसमुद्रतरणेराज्यं तडागमध्येपद्मपत्रेषुघृतपायसभोजनेराज्यं बलाकाकुक्कुटीक्रौंचीदर्शनेभार्याप्राप्तिः
निगडैर्बंधेबहुपाशबंधेवापुत्रधनादि आसनेशयनेयानेशरीरेवाहनेगृहे ज्वलमानेविबुध्येततस्यश्रीःसर्वतोमुखी सूर्यचंद्रमंडलदर्शने
रोगिणोरोगनाशोन्यस्यधनं स्वरारुधिरयोःपानेविप्रस्यविद्याशूद्रादेर्धनं शुक्लांबरगंधधारिण्यास्वप्नगस्त्रियालिंगनेसंपत्तिः छत्रपादुको
पानहखङ्गलाभेधनं वृषभयुक्तरथारोहणेधनं दधिलाभेवेदाप्तिः दधिपयःपानेघृतलाभेचयशः घृतभक्षणेक्लेशः आंत्रैर्वेष्टनेराज्यं मनुष्य-
स्यचरणमांसभक्षणेशतंलाभः बाहुभक्षणेसहस्रं शीर्षमांसभक्षणेराज्यंसहस्रधनंवा सफेनक्षीरपानेसोमपानं गोधूमदर्शनेधनलाभः
यवदर्शनेयज्ञः गौरसर्षपदर्शनेलाभः नागपत्रंलभेत्स्वप्नेकर्पूरागमनंतथा चंदनंपांडुरंपुष्पंतस्यश्रीःसर्वतोमुखी सर्वाणिशुक्लान्यति-
शोभनानिकार्पासभस्मौदनतक्रवर्ज्यं सर्वाणिकृष्णान्यतिनिंदितानिगोहस्तिदेवद्विजवाजिवर्ज्यं स्वप्नस्तुप्रथमेयामेवत्सरांतेफलप्रदः द्वि-
तीयेऽष्टमासैः तृतीयेत्रिमासांते चतुर्थेयामेमासांते अरुणोदयेदशाहांते सूर्योदयेसद्यःफलं अथदुःस्वप्नदर्शनेकृत्यं योमेराज

न्नित्यृचासूर्योपस्थानेदुःस्वप्ननाशः अधःस्वप्नस्येतिजपाद्वा कचिद्दर्शवच्छाद्धेनदुःस्वप्ननाशः चंडीसप्तशतीपाठेनवा यद्वा श्रीविष्णुसह
स्रनामस्तोत्रजपःकार्यः अथवाश्रीभारतस्थस्यश्रीमद्भागवतस्थस्यवागजेंद्रमोक्षस्यश्रवणंपाठोवाइतिदुःस्वप्ननाशकविधिः इत्थंगर्भा
धानादुद्वाहांताःसमस्तसंस्काराः सपरिकरानिर्णीताअस्मिंस्तार्तीयपूर्वार्धे १ ततआन्हिकआचारस्ततआधानादिकाःप्रकीर्णार्याः शांतिक
पौष्टिकमुख्यानित्यानैमित्तिकाश्चोक्ताः २ पूर्वपरिच्छेदकयोःकालःसामान्यतोविशेषाच्च निर्णीतःसहकृत्यैस्तिथिमासाद्येषुविध्यक्तैः
३ नानापापप्रायश्चित्तंव्यवहारविस्तरश्चापि उपदानमहादानादिविधिश्चोक्तोमयूखादौ ४ श्राद्धविधिःसांगोप्याशौचेनिर्णीतिरंत्यसंस्कारः
तार्तीयीकस्योत्तरखंडेग्रेसंप्रवक्ष्यंते ५ मूलभूतानिपद्यानिविकृतानिकचित्कचित् निर्विकाराण्यपिनवान्यप्युक्तान्यत्रकानिचित् ६ मीमांसा
धर्मशास्त्रज्ञाःसुधियोनलसाबुधाः कृतकार्याःप्राङ्गिबंधैस्तदर्थनायमुद्यमः ७ येपुनर्मंदमतयोऽलसाअज्ञाश्चनिर्णयं धर्मेवेदितुमिच्छं
तिरचितस्तदपेक्षया ८ निबंधोयंधर्मसिंधुसारनामासुबोधनः अमुनाप्रीयतांश्रीमद्विठ्ठलोभक्तवत्सलः ९ प्रेम्णासद्भिर्ग्रंथःसेव्यःशब्दार्थ
तःसदोषोपि संशोध्यवापिहरिणासुदामसुनिसतुषपृथुकमुष्टिरिव १० श्रीकाश्युपाध्यायवरोमहात्माबभूवविद्वद्द्विजसार्वभौमः तस्मादुपा
ध्यायकुलावतंसोयज्ञेश्वरोनंतइत्युभावभूतां ११ यज्ञेश्वरोयज्ञविधानदक्षोदैवज्ञवेदांगसुशास्त्रशिक्षः भक्त्योत्तमोनंतगुणैकधामानंताह्वयोनंत
कलावतारः १२ एषोऽत्यजज्जन्मभुवंस्वकीयांतांकोंकणाख्यांसुविरक्तिशाली श्रीपांडुरंगेवसतिंविधायप्रीमातटेमुक्तिमगात्सुभक्त्या १३ त
स्यानंताभिधानस्योपाध्यायस्यसुतःकृती काशीनाथाभिधोधर्मसिंधुसारंसमातनोत् १४ इतिश्रीमत्काश्युपाध्यायानुजानंतोपा-

ध्यायज्ञूरिस्कृतकाशीनाथोपाध्यायविरचितेधर्मसिंधुसारेतृतीयपरिच्छेदेपूर्वार्धंसमाप्तं श्रीमत्पांडुरंगचरणारविंदार्पितमस्तु ॥ ॥

